(५३) आखुम्—उन्दुरम्। क्रौञ्चपतेः—कार्त्तिकेयस्य। कलानाथम्—चन्द्रम्। निर्विण्णः—संसारविरक्तः।

(५४) षडास्यः—कार्त्तिकेयः। इतरः—अपरतनयः। वर्त्तनं—जीविकानिर्वाहः।

(५५) जीवनं—जीविकानिर्वाहोपायः। सद्म—गृहम्। गुरुणा—पुरोहितेन।

(५६) स्वत्वं वित्ते—इत्यादि प्रतिवचनम्।

(५७) जगदम्ब—जगन्मातः। त्र्यम्बकः—त्रिलोचनः शिवः। भावः—देवविषया रतिः।

(५८) मथि धातु + क्त=मन्थितः। अतुलनिर्वृतिम्—अनुपमसुखम्। उज्झति—त्यजति।

(५९) सुरतटिनीव्यतिकरमरणेऽपि—सुरतटिनी गङ्गा तस्याः व्यतिकरः सम्पर्कस्तेन मरणेऽपि। गङ्गाधरस्य मम शिरसि गङ्गा वर्त्तते, तस्यां मृतस्य हरस्य पुनर्हरत्वापत्तौ न काचिद् विकृतिः।

(६०) अपर्णां—पत्रशून्यां लतामिति शेषः; पक्षे दुर्गाम्। रोगनाशिनीं—व्याधिविनाशिनीम्; पक्षे वितापचयकारिणीम्। शूली—शूलग्रस्तः; पक्षे शिवः।

(६१) वामा—सुन्दरी। पशुपतीत्यादि—पशुपतिनयनयोः या ईषत् केकरटेरः आलोकः अपाङ्गदृष्टिः तं कामयते या सा। कैवल्योल्लाससीमा—मुक्तिलाभस्य परमोपायरूपा। भवेत्यादि—भवगहनगतानां संसारारण्यनिवासिनां क्लमनाशी प्रणामो यस्याः सा। कान्तकामा—कान्ते पत्यौ कामाः सर्व्वाभीष्टानि यस्याः सा, सर्व्वथा पतिसेवापरायणेत्यर्थः।

(६२) हे जननि अभ्रान्ता श्रुतिः तव नैवकर्णं नास्तीति वदति, तस्मात् त्वया मम दुःखं न दृष्टं अतिकातरवचनञ्च न श्रुतम्। इत्थं सर्व्वं श्रुतिवाक्यं यदि मय्येव प्रमाणीकरोषि, तर्हि त्वं निस्तारिणी इत्यपि श्रुतिवाक्यात् त्वं मां नूनमेव संसारसागरात् तारयिष्यसीति मे परमो विश्वास इत्यस्य श्लोकस्य निर्गलितार्थः।

(६४) तले—तलदेशे। धातुः—ब्रह्मणः। त्रिगुणमयि—रजःसत्त्वतमोगुणात्मिके। भजन्ते—सेवन्ते, सेवार्थं तत्तत्स्थानेषु तेषां ब्रह्मादीनामाश्रयणात् तेषां तत्तादृशस्थानानां तत्तद्रूपत्वमिति भावः।

(६५) दुर्गेत्यादि—विषमसंसारसागरतरङ्गसमुद्भावितभयभ्रान्तजननिवेदितवाक्यम्। देयदयितं—दातव्यवस्तुषु यत् प्रियं तत्। मा आगाः—न आगच्छ। मूका—निर्वाणासीति शेषः। कथं मां भद्राभद्रं किञ्चिदपि न ब्रवीषीत्यर्थः।

(६६) गिरीशि—हे गिरीशपत्नि। परमौल्कर्षं चरणस्येति शेषः। तं—केशचयम्।

(६८) खं—खकीयम्। शवे—शवरूपधारिणि। या दचयज्ञे यस्य निन्दामाकर्ण्य प्राणांस्तत्याज, सैव तस्य वचसि पदं निदधे अहो किमद्भुतमिति।

(७०) जनुरन्तं—पुनर्जन्मविनाशकम्। मनुं—मन्त्रम्। चतुर्बाहुं—विष्णुम्। चतुरास्यं—ब्रह्माणम्। काञ्चीं—मेखलाम्। विष्णुत्वविरिञ्चित्वप्राप्तिहेतू वर्णितौ। शिवत्वप्राप्तिहेतुस्तु भजन्तं तव पदमित्युक्त्वा पदं सेवमानः शिवो भवतीत्युक्तः "पदस्पर्शमात्राच्छवोऽभून्महेशः" इति प्रसिद्धेः।

(७१) सुरतटिनि—गङ्गे। शूली—शूलरोगग्रस्तो जनः, पक्षे महादेवः। गदी—पीड़ाग्रस्तो जनः, पक्षे गदाधरो नारायणः।

(७२) मुनिना—जह्नुना। सेव्यापि—उपास्यापि। सेवकोपपदगा—उपासकस्य भगीरथस्य नाम्ना नामधारिणी भागीरथीत्यर्थः।

(७४) दीर्घसम्बन्धात्—गङ्गातीरवासिनास्माकमाजन्म तस्याः सेवासम्बन्धात्। पक्षे नराकारं निराकारश्चेत्युभयत्र दीर्घस्वरसंयोगात्। वयन्तु गङ्गोपासनामेव ब्रह्मोपासनां मन्यामहे इति भावः। नाराकारां :नीराकारां वा—जलरूपिणीं गङ्गामित्यर्थः। "नारस्तर्णकनीरयोः"—मेदिनी।

(७५) त्रिदोषनाशाय—त्रयो दोषाः आध्यात्मिक आधिदैविक आधिभौतिकश्च एतेषां नाशाय ; पक्षे वायुपित्तादिनाशार्थम्। चतुर्दोषं—दोषचतुष्टययुक्तम् ; पक्षे चतुर्बाहुं विष्णुम्। चत्वारः दोषा दोषश्च यस्य तादृशम्। विकत्थसे—सुखदा मोक्षदेत्यादिनामभिः श्लाघां करोषि।

(७६) अतिजवेन—निरतिशयवेगेन। इह—त्रिवेण्याम्।

(७७) मुरहर—हे श्रीकृष्ण। त्रिपथगा—गङ्गा। "विष्णुपादोद्भवा गङ्गा" इति शास्त्रम्।

(७८) प्रमथपतितां—शिवत्वम्। त्रिभुवनेति—त्रिभुवनजनानां त्राणकारणं सलिलं यस्याः सा तथाभूता।

(७९) व्यालः—सर्पः। खगवरः—गरुड़ः। नागः—हस्ती। मिहिरः—सूर्य्यः। विघ्नसिन्धोः—विघ्नरूपसमुद्रस्य।

(८०) धराधरेन्द्रदुहिता—हिमाचलकन्या पार्वती इत्यर्थः। विघ्नकुलान्तकः—गणेशः। पितृसखः—पितृबन्धुः। क्रौञ्चविदारणे—क्रौञ्चनामकपर्व्वतभेदने। पाणिग्रहः—विवाहः।

(८१) एतत् फलं—मम यथेष्टभोजनाभावरूपम्।

(८३) उत्तमाङ्गे—मस्तके। काशी केवलं पञ्चक्रोशव्यापिनी गङ्गा तु लचयामा लचं यामाः प्रहरा दैर्घ्यातिक्रमकाला यस्यास्तादृशी अतिदीर्घा इत्यर्थः।

(८४) (क) स्वर्दीर्घिका—मन्दाकिनी, गङ्गा इत्यर्थः। (ख) घर्माम्भः—घर्मजलम्। भगवतः—विष्णोः। शम्भुनगरे—काश्याम्। तारकं—तारकमन्त्रः।

(८५) मोमेति—मा लक्ष्मीः उमा दुर्गा सावित्री च ताभिः उपेताः युक्ता मिलिता इत्यर्थः। रथचरणः—चक्रम्। तार्क्ष्यः—गरुड़ः। पत्रं—वाहनम्।

(८६) पूतनामारणलब्धकीर्त्तिः—पूतनाराक्षसीवधेन विख्यातनामा; पक्षे पूतनामा पवित्रनामा, रणलब्धकीर्त्तिश्च। काकोदरः—सर्पः कालियनाग इत्यर्थः; पक्षे अदरः नास्ति दरः भयं यस्य स निर्भयः गर्वित इति यावत् तादृशः काकः जयन्त इत्यर्थः। यशोदया—नन्दपत्न्या; पक्षे यशश्च दया च ताभ्याम्।

(८७) विनाशास्त्रं—शास्त्रं शास्त्रज्ञानं विना; पक्षे विनाशस्य अस्त्रं स्वस्यामङ्गलकारणम्, भेदमित्यस्य विशेषणम्। कलयति—जानीते। प्रकृतिः—स्वभावः; पक्षे धातुः। अभिन्ना—एका। हरिहरशब्दयोः प्रकृतिः, हृ इत्येका एव। प्रत्ययभेदात्—प्रत्ययः विश्वासः तस्य भेदः तस्मात्; पक्षे इ, अच् इति प्रत्यययोर्भेदात्।

(८८) शङ्खः—पाञ्चजन्यः। कपालः—भिक्षाभाजनम्। द्वारवती—द्वारका। नागारिः—गरुड़ः। द्विव्यक्षौ—एको द्व्यक्षः अपरस्त्र्यक्षः। श्रीवत्सः—वक्षःस्थरोमावर्त्तविशेषः।

(८९) (क) उमाधवपक्षे—"सर्वदा उमाधवः शिवः त्वां पायात्। येन ध्वस्त-

मनोभवेन विनाशितमदनेन बलिजितो विष्णोः कायः पुरा स्त्रीकृतः। मोहिनीरूप-दर्शनेच्छुना शिवेन प्रेरितो विष्णुः पुनर्मोहिनीरूपं दधार इति पौराणिकी कथा। [ अथवा अस्त्रीकृतः इति छेदः। त्रिपुरासुरवधकाले विष्णुर्यस्य वाणो बभूव इत्यपि पौराणिकी वार्त्ता ] यस्य उत्कर्षेण अवस्थितौ भुजङ्गरूपौ हारवलयौ यस्य यस्मिन् वा तथाभूतः। यश्च शिरसि गङ्गाम् अधारयत्। यद्वा शरीरार्द्धेन गौरीं शिरसि गङ्गां च इत्यभिप्रायेण चकारः। यस्य शिरः शशिमत् चन्द्रयुक्तं हर इति स्तुत्यं नाम च अमरा आहुः। अन्धकस्य असुरविशेषस्य विनाशकरः" ।—रामचरण तर्कवागीशः।

(ख) माधवपक्षे—"सर्वदः सर्वाभीष्टदाता माधवः त्वां पायात्। अभवेन जन्मरहितेन येन अनः शकटं ध्वस्तं पादेन परावर्त्तितम्। बलिः असुरराजस्य जेता। कायः पुरा अमृतपरिवेषणकाले स्त्रीकृतः स्त्रीत्वं प्रापितः। अमृतार्थं विवदमानानां देवासुराणां अमृतपरिवेषणाय मायया नारायणेन मोहिनीरूपं धृतमिति पौराणिकी कथा। यश्च उद्वृत्तभुजङ्गहा—उद्वृत्तस्य उद्धतस्वभावस्य भुजङ्गस्य अघासुरस्य हन्ता। यद्वा कालियस्य पीड़ाकरः। आरवलयः—अरिसम्बन्धि सैन्यं यातीत्यर्थः। यद्वा उद्वृत्तभुजङ्गहारं बलं यस्य तेन गरुड़ेन यातीत्यर्थः। अगं गोवर्द्धनं कृष्णरूपेण, गां पृथ्वीञ्च कूर्म्मरूपेण योऽधारयत्। शशिनं मथ्नातीति शशिमत् राहुस्तस्य शिरोहरः इति स्तुत्यं नाम यस्य चामराः आहुः। अन्धकानां यादवानां क्षयकरः ( क्षयो निवासः ) द्वारकाख्यनिवासनिर्म्माता।"—रामचरणतर्कवागीशः।

(६०) (क) ( गौरीपक्षे ) विश्वम्भरे—हे जगद्धात्रि। शवशिवे—शवरूपे शिवे अवस्थिते इति शेषः। चिद्व्योमतः—चिदाकाशरूपब्रह्मवस्तुनोऽपि। प्रथमं—वस्तु इति शेषः। योगिनस्तुतिपराः—योगिनः स्तुतिपराः इति पदच्छेदः। प्रणिधानदृश्या—प्रणिधाने योगावलम्बनदशायां या दृष्टिस्तया।

(ख) ( शिवपक्षे ) विश्वम्भरेश—हे विश्वपते, हे ईश। यद्वा विश्वम्भरस्य विष्णोः ईश उपास्य इत्यर्थः। प्रथमं—अनादिमित्यर्थः।

(६२) राधे क्षेममिति चन्द्रावलीं प्रति भ्रमेण कृष्णस्योक्तिः। प्रियस्य—कृष्णस्य। क्षेमं कंस—प्रियं कृष्णं कंसेति सम्बोध्य चन्द्रावली प्रतिवक्ति क्षेममिति। दृष्टः—अहमिति शेषः। राधा वा—त्वयाहं यथा राधा दृष्टा, तथा मयापि त्वं कंसो दृष्टः।

(९३) गोदुहः—गोपालाः। क्लीबः—लज्जितः।

(९४) मे—हे मातः। "मः शिवश्चन्द्रमा वेधा मा लक्ष्मीश्च प्रकीर्त्तिता। मा च मातरि माने च बन्धने मूः प्रकीर्त्तिता"—एकाक्षरकोषः।

(९५) चषकं—पानपात्रम्।

(९६) माधवः—अहमिति शेषः, एवं परत्रापि। घोराहिमर्द्दी—घोरं भीषणं अहिं कालियसर्पं मृद्नाति पराजयते यः सः।

(९७) मातः—इति कार्त्तिकेयस्योक्तिः। जीव—इति पार्व्वत्या उक्तिः, जीव प्राप्स्यसि इति आशीर्वचनम्। प्रयच्छति—तव तात इति शेषः। मे—मह्यम्। प्रहिते—प्रेरिते। गुहे—कार्त्तिकेये। विघटयति—विश्लेषयति सति। सन्ध्याञ्जलिं—सन्ध्योपासनार्थमञ्जलिपुटम्।

(९८) लुठति—आहन्ति। अग्निभूः—कार्त्तिकेयः। विचेष्टितं—विरुद्धं कर्म्म। चरितं—आचरणम्। मिमीते—परिमाति।

(९९) एषा अल्पा भूमिः किं कथं याच्यते इति शेषः। त्रैलोक्यमित्युत्तरम्।

(१०१) केशवः—विष्णुः ; पक्षे प्रशस्तकेशः पुरुषः। शौरिः—शूरो नाम वसुदेव-पिता तस्यापत्यम्। चक्री—विष्णुः ; पक्षे कुम्भकारः।

(१०२) हरिः—वानर इत्यर्थमादाय प्रत्युत्तरम्। कृष्णः—कृष्ण इति वानर-विशेषणं कल्पयित्वाह बिभेमीति। मधुसूदनः—मधु पुष्परसं सूदयति हरतीत्यर्थमादाय प्रत्युक्तिः। क्लीबः—लज्जितः।

(१०३) यमुना कुन्दकुञ्जेन—यमुना पुरीवर्त्तिना ; पक्षे नास्ति मुः मुकारो यत्र तेन, आदौ मुरहितेन मुकुन्दकुञ्जेन, केवलकुन्दकुञ्जेन इत्यर्थः। मुकुन्दकुञ्जेनैव मे प्रयोजनं न तु कुन्दकुञ्जेनेति भावः।

(१०४) भ्रातः हे लक्ष्मण। हिमचन्द्रमाः—शीतलचन्द्रः।

(१०५) वत्स—हे लक्ष्मण। देव्याः—सीतायाः। मृग्यते—अन्विष्यते।

(१०८) कुपिता—क्रोधान्विता ; पक्षे पृथिवीपालक;। जगतां माता—जगत्प्रसविनी ; पक्षे जगद्वासिनां धर्म्माधर्म्मकर्म्मणां परिमाता, फलदानकाले तुलनाकारी इत्यर्थः। अनन्ता—असीमा ; पक्षे अनमनशीलः। शौरिः—विष्णुः।

(१०९) लोले—इति पार्वत्या उक्तिः। ब्रूहि कपालिकामिनि—इति लक्ष्म्या उक्तिः। लोले इति सम्बोधनं यथा चापल्यदोषं सूचयति, तथा कपालिकामिनि इत्यपि भिक्षुकपत्नीत्वगर्हां गमयति। पाथसां जलानां पतिः समुद्रः। प्रत्येति—विश्वसिति।

(११०) भिक्षार्थी सः—भिक्षुः स शिवः; पक्षे त्रिपादपरिमितभूमिभिक्षार्थी विष्णुः। ताण्डवं—उद्धतनृत्यम्। वृन्दावनान्ते—अन्तशब्दोऽत्र स्वरूपवाचकः। मृगशिशुः—मृगः करी, करिवदनः गणेशः शिशुर्यस्य सः गणेशपिता इत्यर्थः ( "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः" इति मेदिनी ); पक्षे पशुशावकः। जरठ-वृषपतिः—जरठः वृद्धः स चासौ वृषश्चेति तस्य पतिः; पक्षे जरठः वृषाणां पतिः। लीलासंलापः—लीलया विलासेन संलापः मिथोभाषणम्।

(११२) पूर्वचरणद्वये सप्तमाक्षरविलोपात् योऽर्थः प्रतीयते, स एव सीताया अभिमतः। अधिष्ठितेति रावणसम्बोधनम्।

(११३) हे गौरि मां प्रति वृथा कोपेन किम् कोपं मा कुरु इति शिवोक्तौ 'गौः' इति सम्बोधनपदं 'इमाम्' इति द्वितीयान्तपदं परिकल्प्य पार्वती प्राह, ननु भोः अहं गौरिति स्वीकरोमीति शेषः। कां प्रति कुप्यामि। अथ शिवः 'गौः' 'इमाम्' इति पदद्वयस्य पार्वतीकृतविच्छेदमुपेक्षमाण आह 'मयि' मां प्रति कोप इति अनुमानतः अनुमानेन अहं जानामि। पश्चात् पार्वती 'अनुमानतः' इति शिवोक्तपदस्य श्लेषेण अर्थान्तरं प्रतिपाद्याह सत्यमित्यादि—अनुमानतः इति तव वचनात् त्वं अनुमानतः—न उमा अनुमा उमाव्यतिरिक्ता नारी तस्यां नतस्तद्वशीभूतः इत्यर्थः; इति सत्यमेवेत्यर्थः। गिरिभुवः—पार्वत्याः। कुटिलाः—श्लिष्टाः।

(११४) प्रिये—गौरि। क्रोधः न क्रियताम्, इति शिवोक्तिः। गौरी तु शिववाक्यस्य नक्रः कुम्भीरः अधःक्रियतां त्यज्यताम् इत्यर्थमादायाह, स नक्रस्तु भवन्मौलिस्थगङ्गोदरे। मुग्धे—प्रकृतार्थपरिज्ञानमूढे। मानसपूजितम्—मनः-कल्पितमर्थं त्यज इति शिवोक्तिः। अथ गौरी मानसपूजितमिति पदस्य मानसं तदाख्यः सरोवरः पूजितं आदृतं येनेति समासाश्रयेण हंसरूपमर्थं परिकल्प्य प्राह युष्मन्नियोगद्वयं कृतम्, मदन्तिके नक्रो हंसश्च नास्त्येव तदुभयन्तु तव शिरश्चारिण्यां

गङ्गायामेव। वक्रे—महाकवस्य विपरीतार्थग्राहिणि। असुं—पूर्वोक्तम्। श्लेषं—महाकवस्य अर्थान्तरयोजनाम्। निराकुरु—परिहर इति शिवोक्तिः। गौरी च वक्रे इति सम्बोधनपदं सप्तम्यन्तत्वेन श्लेषमिति पदञ्च आलिङ्गनार्थकत्वेन कल्पयित्वा प्रत्युवाच, वक्रः—कुटिलस्त्वमिति शेषः मया कदा आश्लिष्टोऽसि आलिङ्गितोऽसि, नाहमिदानीं त्वामालिङ्गितवती, तत् कथमालिङ्गनपरिहाराय मामेवं ब्रवीषीत्यर्थः। वामाङ्गा—अर्द्धनारीश्वरमूर्त्तौ वामे वामभागे अङ्गं देहो यस्यास्तया पार्व्वत्या। अन्यत् सुगमम्।

(११५) अनेन श्लोकेन शिवसमीपे नवोढ़ायाः पार्वत्याः स्वेदादिसात्त्विकभाव-गोपनं वर्णितम्।

(११६) हरशिरसि गङ्गामवलोक्य पार्व्वती हरं पृच्छति, हरस्तु गङ्गां गोपयन् पार्व्वतीमन्यथा प्रतिवक्ति एषा ते इत्यादि।

(११८) भूपे कूपसाधर्म्यं दर्शयति भूप इति। नमज्जनसुखावहः—कूपो हि मज्जनेन अवगाहनेन यत् सुखं तत् आवहति जनयति यस्मात्तथो न। पक्षे नमतां नम्राणां जनानां सुखावहः सुखजनकः। कूपस्तावत् गुणसम्बन्धात् रज्जुसंयोगात् पात्रानुसारतः घटीघटादिभेदानुसारेण, यादृक् पात्रं तादृगित्यर्थः। नित्यं ददाति पय इति शेषः; पक्षे गुणसम्बन्धात् विद्यादिगुणवत्तया हेतुना, पात्रानुसारतः योग्यायोग्यव्यक्तिभेदेन। अन्यत् सुगमम्।

(११९) श्लोकेऽस्मिन् चतुर्विंशत्यक्षरवृत्तम्; वृत्तचन्द्रिकामते द्रुमिलाच्छन्दः, वाग्वल्लभमते तु द्विमिलाच्छन्दः।

(१२१) सर्वं ददासीति सर्व्वदः। वृथा—मिथ्या, स्तूयसे त्वमिति शेषः। सर्वंशब्दस्य सङ्कोचं दर्शयित्वा वृथात्वमुपपादयति नेति। अरयः पृष्ठं पृष्ठदेशं तवेति शेषः न लेभिरे, त्वं कदापि रणभङ्गेन पलायमानः शत्रूणां स्वस्य पृष्ठं न दत्तवान्, शत्रून् पृष्ठदर्शनं न कारितवानसीत्यर्थः। अपिच परयोषितः परस्त्रियः नेत्रं त्वदीय-नेत्रपातं न लेभिरे इति शेषः। शत्रुभिस्तव पृष्ठं परस्त्रीभिश्च नेत्रं त्वत्तः कदाचिन्न लब्धम्। अत एतदुभयोरप्रदानं भवतः सर्वदातृत्वं व्याहन्ति। एतेन राज्ञोऽसाधारणं वीरत्वं जितेन्द्रियत्वञ्चेति व्याजस्तुतिरलङ्कारः।

(१२२) गौः—सरस्वती, शास्त्रज्ञानमिति यावत्। रमा—लक्ष्मीः, धनप्राचुर्य्यमित्यर्थः। ते—लक्ष्मीसरस्वत्यौ। विनयो नास्ति—तवेति शेषः। सा—लक्ष्मीश्च। सा—गौश्च। स—विनयश्च, एते त्वयि सन्ति। अतः साधारणधनिविद्वद्भ्यो विलक्षणोऽसीति भावः। धनवन्तो विद्यावन्तश्च प्रायश उद्धता दृश्यन्ते। त्वयि—अत्र तुकारोऽध्याहार्य्यः।

(१२३) न जानाति—न ज्ञानवान् इत्यर्थः। न ददाति—न दाता इत्यर्थः। जगती जाया यस्य सः, जायाया जानिरादेशः। जगतीशब्दोऽत्र पृथिव्यर्थे प्रयुक्तः। तेन—भूगतस्यापि भवतः स्वर्गगतबृहस्पतिकल्पवृक्षापेक्षया गुणोत्कर्ष इति सूचितम्।

(१२४) ते जनाः कौपीनधनाः—कौपीनमात्रावलम्बिनः ; पक्षे कौ पृथिव्यां पीनधनाः प्रचुरविभवाः। धात्रीफलम्—आमलकीफलम् अन्यभोज्याभावात् ; पक्षे धात्र्याः पृथिव्याः फलं भोगैश्वर्य्यादिकम्। न दन्तिवाजिनिवहाः—हस्त्यश्वसमूहाः न ; पक्षे वाजिनिवहाः अश्वसमूहाः नदन्ति शब्दायन्ते। क्षितिः—क्षयः विनाश इति यावत् ; पक्षे क्षितिर्भूमिः राज्यमित्यर्थः। निजकुलं समलं कलङ्कितं कृतम् ; पक्षे समलङ्कृतं सम्यग् भूषितं। परमेश्वरेण—सम्राजा।

(१२५) गुणयोगात्—ज्यासंयोगात् ; पक्षे शीलसौजन्यादिगुणसम्बन्धात्। सन्नतः—अवनतकायः ; पक्षे विनयनम्रः इति धनुषा सह साम्येऽपि धनुर्वक्रं त्वन्तु वक्रस्वभावो न। रुचिमत्त्वात्—कान्तिमत्त्वात्। विधुः—कलङ्की, त्वन्तु न तथा। गभीरः—अतलस्पर्शः ; पक्षे गाम्भीर्य्यगुणयुक्तः। अप्रतीतः—अविश्वस्तः, जलधिर्बृंहिंस्रजलचरसमाकुलत्वात् अविश्वस्तः, त्वन्तु विश्वस्तः, धनुराद्युपमानानां गुणा एव त्वयि सन्ति न तु तेषां दोषा इति तेभ्यः समुत्कर्षख्यापनाद् व्यतिरेकालङ्कारः।

(१२६) हे उर्वीधर राजन् रम्यकाव्यकरणे त्वां सत्यं निश्चितं सत्यवतीभये—सत्यवती भूरुत्पत्तिस्थानं यस्य स सत्यवतीभूः द्वैपायनो व्यासः तं आचक्षे। सत्यवतीभि इति णिजन्तनामधातोर्लट् ए। एवं परत्रापि। सेनावने—सैन्यगहने यद्वा सैन्यरक्षणे। शरभये—शरभूः कार्त्तिकेयः तम् आचक्षे ; शरभि इति नामधातोः पूर्व्ववद् रूपम्। भाषणे—संलापे। वागीशये वागीशं बृहस्पतिम् आचक्षे। त्राणे—रक्षणे विपदि। विष्णये—विष्णुम् आचक्षे। व्याकरणे—दाक्षीकुक्षिभये दाक्षी पाणिनिजननी तस्याः

कुक्षिः उदरं तस्माद् भूरुत्पत्तिर्यस्य स दाक्षीकुक्षिभूः पाणिनिः तम् आचक्षे। रणे—युद्धे। पृथोदरभवे—पृथा कुन्ती तस्या उदरं भूरुत्पत्तिस्थानं यस्य स तम् अर्जुनम् आचक्षे। वितरणे—दाने। देवद्रुमे—देवद्रुः कल्पवृक्षः तम् आचक्षे, सर्वेषां सर्वाभीष्टप्रदस्त्वम् इत्यर्थः। विश्वम्भराभूषणे—विश्वम्भरायाः पृथिव्याः भूषणे अलङ्करणे। मेरवे—मेरुः हेमाद्रिः तम् आचक्षे। सर्वत्र अहमिति शेषः। अन्ये जना यद्यद्-गुणवत्तया जगति तैः सह उपमीयन्ते, त्वं हि तत्सर्वोपमानभूतोऽसीति भावः।

(१२७) असौ—वारिधिः। स—मुनिः अगस्त्य इति शेषः। तद्—व्योम। पदं—चरणम्। साम्प्रतं पुरीधाम्नि जगन्नाथदेवस्य यन्मन्दिरं दृश्यते तस्य निर्माण-मनेनैव राज्ञा कारितमिति प्रसिद्धिः।

(१२८) मानसं मदीयमिति शेषः जले लवणवत् देव्यां लीनं तन्मयम् आसीत्। अतस्तत् प्रतिहर्तुं न शक्नोमि, इति पराभवं प्रतिकर्तुं हरः महादेवः पक्षे हर-नामकः पुरोहितः देव्या मनोजिहीर्षया चित्तं हर्तुमिच्छया तन्मनोहरं तस्या देव्या मनोहरं चित्ताकर्षकं किरीटं मुकुटं हरते चोरयति।

(१३०) हस्तन्यस्तकुशोदके—दानार्थं कुशवारि गृह्णति सति। भूः—पृथिवी। न कम्पते—यस्मै कस्मैचिद् दानाशङ्कयेत्यर्थः। सर्व्वसहा—यतः सा निखिलं क्लेशं सोढुं समर्था। देवागारतया—देवानां निवासस्थानतया। काञ्चनगिरिः—सुमेरुः। न ज्ञातं द्विपानां हस्तिनां भक्ष्यं येन तादृशस्य भिक्षोर्भवने प्रस्थानेन या दुःस्था दुःखेनावस्थितिः तस्या आशया शङ्कया।

(१३१) निरञ्जनम्—निर्मलम्, उत्कृष्टमित्यर्थः; पक्षे अञ्जनशून्यं पवित्र-मित्यर्थः। सुदुष्प्रापम्—उभयपक्षे सुदुर्लभम्। सर्वव्यञ्जनरञ्जनम्—सर्व्वेषु व्यञ्जनेषु अन्नभोजनस्य उपकरणेषु सुखदायकम्; पक्षे सर्व्वेषां सर्गादौ अव्यक्तानां पदार्थानां व्यञ्जनेन सगुणावस्थायां व्यक्तीकरणेन रञ्जनं लोकप्रत्यक्षीभावजननम्।

(१३२) कुञ्जघट्टनृपते—मुर्शिदाबादप्रदेशान्तर्गतं कुञ्जघट्टनामकं स्थानं महाराज नन्दकुमारस्य जन्मभूमिरिति प्रसिद्धिः।

(१३३) द्वितीयभूतभूयिष्ठा—जलबहुला। अल्पायसम्भवा—स्वल्पक्षितिका। अस्याः—मूर्त्तेः। पार्थिवसम्बन्धः—भूमिसम्पर्कः; पक्षे पार्थिवस्य राज्ञस्तव सम्बन्धः

कृपादृष्टिरिति यावत्। यथा जलबहुलं स्वल्पचितिकं हि द्रव्यं अधिकतरचितिसंयोगं विना न कुत्राप्युपयुज्यते, तद्वदियमपीति भावः।

(१३४) अगस्त्यवंशसम्भूता:—अगस्त्यकुलजाता ब्राह्मणा इत्यर्थः। वातापि:—असुरविशेष: ; पक्षे निम्बूविशेष:। नवकृष्ण:—नूतनावतारी श्रीकृष्ण: ; पक्षे तन्नामको महाराज:। कमला—निम्बूविशेष: ; पक्षे नवकृष्णमहाराजस्य सहधर्म्मिणी।

(१३७) भिक्षाश्रय:—भिक्षालब्धद्रव्यस्य पात्रम्।

(१३८) त्वत्कीर्त्तिशीतकिरणे—तव यशोरूपचन्द्रे। रोहिणी—चन्द्रपत्नी। स्वपतीत्यादि—स्वस्याः पतिः तस्मिन् संशयः उभयोः सौन्दर्य्यादिना तुल्यत्वात् को मे पतिरिति सन्देहस्तेन जातशङ्का पातिव्रत्यभङ्गभयेन भीता सती। कज्जललाञ्छनेन—कृष्णवर्णाञ्जनचिह्नेन। प्रेयांसं—प्रियतमं गगनचन्द्रम्। आङ्कयत्—अङ्कितमकरोत्। कलङ्कः—कुकर्म्मजो दोषः।

(१४०) आलीवर्द्दिनवाबं—बङ्गविहारोत्कलानामधिपतिम्। नवद्वीपेश्वरं—नवद्वीपाधिपतिं महाराजं कृष्णचन्द्रम्। नवकृष्णभूपतिम्—कलिकाताशोभा-बाजाराधिपतिं महाराजं नवकृष्णम्।

(१४१) मातृतात:—मातामहः आलिवर्द्दिनवाब इत्यर्थः। अल्लामुख:—अल्लेति परमदेवताया नाम मुखे यस्य सः। मुनसरमुलुक:—सिराजद्दौलानवाबस्य नामान्तरम्।

(१४२) मुक्तादिवर्ण:—खण्डिताद्याचर: ; श्लोकेऽत्र शत्रुपक्षे आद्याचरत्याग इत्यर्थः। वैकुण्ठाभिप्रणीत:—( सम्राट्पक्षे ) वैकुण्ठः विष्णुः अभिप्रणीतः आराधितः येन सः ; ( शत्रुपक्षे )—कुण्ठा सङ्कोचः अभिप्रणीता सम्यग्रचिता येन सः। कोदण्डोदारनामा—( सम्राट्पक्षे ) कोदण्डेन धनुषा उदारं प्रशस्तं नाम यस्य सः ; ( शत्रुपक्षे )—दण्डेन दण्डप्राप्त्या उदारं विख्यातं नाम यस्य सः, दण्डग्रहणेन अपयशोभागीत्यर्थः। अन्यत् सुगमम्।

(१४४) गन्धवाहाधिकविहितजवा:—वायोरप्यधिकवेगशालिनः।

(१४५) सोऽयं—मसीसङ्गम:। तिग्मांशुकन्या—सूर्य्यतनया यमुना इति यावत्। नूरदीन:—जाहाङ्गीर-बादसाहस्य नामान्तरम्।

(१४७) सम्भाविताः—सादरं कृताः। दिल्लीवल्लभः—अत्र साजाहान-बादसाहः। आसनं—वासस्थानं आग्रानगरीत्यर्थः। मधुपुरी—मथुरा।

(१४९) असौ दारा ( दारासिकः ) साजाहान-सम्राजो ज्येष्ठपुत्त्रः।

(१५३) दुरूहद्रुते—दुरूहश्लोकानां द्रुतरचनायाम्।

(१६२) गुम्फः—ग्रन्थनम्। कुम्भी—हस्ती। पञ्चाननः—सिंहः। कवित्वविधौ पञ्चसंख्यकवदनविशिष्ट इत्यपि प्रतीयते।

(१६३) विसरः—विस्तरः सञ्चार इति यावत्। उट्टङ्किताः—उत्कीर्णा उल्लिखिता इत्यर्थः।

(१६४) रघुकारे—कालिदासे। दाक्षीपुत्त्रे—पाणिनौ।

(१६५) भा—दीप्तिः; पक्षे यशः इत्यर्थः। रवेः—रवेरिव ( लुप्तोपमा )। माघस्य—माघकविविरचितशिशुपालवधकाव्यस्य; पक्षे माघमासस्य।

(१६६) "दक्षिनः पदलालित्यमि"ति दाक्षिणात्यदेशीयः पाठः।

(१६७) माघेन—तन्नामककाव्येन; पक्षे माघमासेन। पदक्रमे—सुप्तिङन्त-पदविन्यासे; पक्षे चरणक्षेपे। भारवेः—तन्नामककवेः ( अरन्त इत्यस्य कर्म्मणि षष्ठी ); पक्षे रवेः सूर्यस्य भाः किरणान्।

(१६८) बाणभट्टः मयूरकवेर्जामातासीदिति प्रसिद्धिः।

(१६९) असौ मुरारिकविरेव अनर्घराघवकारः। जनकोऽस्य भट्टश्रीवर्द्धमानो जननी च तन्तुमती। "भवभूतिमनादृत्य निर्वाणमतिना मया। मुरारिपदचिन्तायामिदमाधीयते मनः"—कस्यचित्।

(१७०) कान्यकुब्जमहाराजो यशोवर्मा प्रसिद्धः कविरासीत्। तस्य सभा वाक्पतिराजभवभूतिभ्यामेव समलङ्कताऽऽसीत्।

(१७२) सौगन्ध्यमधुरम्—अतीव मनोहरम्।

(१७७) गाम्—पृथिवीं भूमिमित्यर्थः। साङ्गारप्रकरां—प्रज्वलिताङ्गारयुक्ताम्। अमर्षन्—असहमानः। प्रेङ्खत्—चलत्।

(१७८) अकिल्बिषः—निष्पापः, गङ्गाजलसंसर्गाद् निर्दोष इति यावत्। प्रियतमस्य दोषदृष्टिः प्रायशो न भवतीति विशेषणसङ्गतिः। मुक्तिः—मोक्षः; पक्षे मोचनं विरेचनमित्यर्थः।

(१७९) विलोचनद्दारि—नेत्रतृप्तिकरम्। आरटितं—शब्दः। करभ—उष्ट्र।

(१८०) माकन्दम्—आम्रम्। मकरन्दतुन्दिलं—प्रचुरमधुयुक्तम्। कर्णारुन्तुदं—श्रुतिकटु। शङ्केत—मन्येत।

(१८२) परभृत—कोकिल। गोष्ठी—सभा।

(१८३) भिल्लार्भकाः—भिल्ला म्लेच्छजातिविशेषास्तेषामर्भका बालकाः।

(१८४) अरविन्दवनैकबन्धुः—पद्मसमूहसुहृत्। चक्र—चक्रवाक।

(१८८) प्रियतनयतया—तनयवात्सल्येन। दत्तहुङ्कारमुद्रा—दत्तहुङ्कारसङ्केता। धेनुः—सवत्सा पयस्विनी गौः। मूर्ध्ना—मस्तकेन। आहत्याहत्य—पुनःपुनः पीड़यित्वा। अनु—पश्चात्। प्रस्नुतं—क्षरितदुग्धम्। ऊधः—स्तनम्। किञ्चिदित्यादि—किञ्चित् ईषत् कुब्जं वक्रम् एकं जानु यस्य तादृशस्य। अनवरतेत्यादि—तथा अनवरतं चलत् अस्थिरं चारु सुन्दरं पुच्छं यस्य तथोक्तस्य। विच्योतत्क्षीरेति—विच्योतन्ती क्षरन्ती या क्षीरधारा तस्या लवेन लेशेन शवलं नानावर्णं मुखं यस्य तथाभूतस्य। तर्णकस्य—वत्सस्य। उत्कर्णं—उन्नतौ कर्णौ यस्य तम्। आतृप्ति—तृप्तिपर्य्यन्तं वत्सस्येति शेषः। लेढ़ि—स्वदते।

(१९१) परिमलबहुले—सुगन्धपूरिते।

(१९२) दानाम्भितलोचनः—दानेन स्वयम्मदेन वितरणेन वा अम्भिते विलोचने यस्य सः।

(१९४) असौ परमविदुषी जयन्तीदेवी फरिदपुरजेलान्तर्गतकोटालिपाड़ानिवासिनः प्रसिद्धनैयायिकस्य श्रीकृष्णसार्व्वभौमस्य भार्य्यासीत्। तौ उभौ मिलित्वा "आनन्दलतिका"-नामकं ग्रन्थमेकं रचयामासतुः। "आनन्दलतिकाग्रन्थो येनाकारि स्त्रिया सह" इत्येव वचनं ग्रन्थशेषे प्राप्तम्।

(१९६) वेल्लति—चलति सतीत्यर्थः। हरिद्दन्तावलाः—दिग्दन्तिनः।

(१९७) कीटगर्भ—शङ्खो हि कीटविशेषस्यावासः। अन्तः—मध्ये। क्षाराम्बुसम्भवः—लवणजलसमुद्भूतः, एतेनास्य जन्म च निन्दितमिति सूचितम्। शून्यः—अन्तःशून्यः असार इति यावत्। इत्थं बहुदोषदूषितोऽपि शङ्खः केन गुणेन श्रीपतिनिकटे विष्णुसन्निधौ स्थितिं लेभे इति साक्षेपः प्रश्नः। कश्चित् गुणहीनोऽपि कस्यचित् गुणिनः प्रीतिपात्रं भवतीति भावः।

(१९८) कूजितमञ्जुलजालकी—विहगध्वनिविशिष्टशैवालसमूहे।

(२००) आत्मत्वचस्त्यागः—एतेन महती त्यागशीलता दर्शिता ; निर्यत्नोपनतैः—अनायासलब्धैः। वृत्तिः—जीविका। एकत्र—एकस्मिन् पक्षे। चर्य्या—आचरणम्। अनृजुवर्त्मता—वक्रगतिः ; पक्षे कापटव्यवहारः। वक्त्रे द्विरसना—मुखे जिह्वाद्वयं। पक्षे वाक्यनिष्ठाभावः। वीक्षणं—दृष्टिः ; पक्षे विषवद्दृष्टिः। भोगिन्—सर्पं ; पक्षे भोगासक्त।

(२०२) सितं—शुभ्रम्। कज्जलाभं—कृष्णवर्णम्। चीयते—वर्द्धते। अपचीयते —मन्दीभवति। उभयत्र कर्म्मकर्त्तरि प्रयोगः।

(२०४) गिरिकुहरे—पर्व्वतगुहायाम्।

(२०७) त्रपाश्यामा—त्रपया लज्जया श्यामवर्णा। पनसम्—कण्टकिफलम्। लाङ्गलिफलम्—नारिकेलम्।

(२०८) अलिनः—वृश्चिकस्य। कादलीमूलरसेन वृश्चिकदंशनजनितज्वाला निवार्य्यते।

(२०९) करटालयः—काकवसतिः। भूतनिकेतनं—देवयोनिविशेषवासस्थानम्।

(२१०) सम्भूतिः—जन्म। परिमलः—सुगन्धः। गीर्व्वाणचेतोहरः—देवानां मनोमोहनः। दातृगुणोत्करः—दानकर्त्तृगुणसमूहः। अर्थीत्यादि—अर्थिप्रवराणां याचकश्रेष्ठानां या अर्थिता तस्याः अर्पणविधौ दानविषये। विवेकः—ज्ञानम्।

(२११) प्रेङ्खत्—चलत्। श्रीखण्ड—चन्दन।

(२१२) अलिना—भ्रमरेण। उरीकरोषि—अवलम्बसे, प्राप्नोषीति यावत्। कुशेशयदृशां—कुशेशयं पद्मम्, तद्वत् दृशौ यासां तासां, कमललोचनानां रमणीनामित्यर्थः।

(२१४) गदराशिनाशनिपुणं—रोगसमूहविनाशदक्षम्।

(२१५) स्वं मूलं—स्वीयं मूलदेशम्। नोपयोगमगमत्—आनुकूल्यं न चकार।

(२१६) उलूपविटपी—'उलुखड़' इति भाषा।

(२१७) उन्मत्त—रे धुस्तूर। पिशाचपतिना—महादेवेन। चन्द्रोपलः—चन्द्रकान्तमणिः। वार्द्धिः—समुद्रः।

(२१९) सञ्जीवनम्—मम प्राणस्वरूपम्। जीवनम्—जलम्। सद्म—जीवनद्य। प्रसारितदला—विस्तारितपत्रा। मित्रे—सूर्य्ये।

(२२२) कर्पूरेति—कर्पूरमिश्रिता धूल्यस्तामिः रचितम् आलवालं यस्य सः। पलाण्डुः—'पेँयाज' इति भाषा।

(२२३) श्रीमन् वसन्त—हे शोभासम्पन्नवसन्तसमय। विलूना—छिन्ना।

(२२४) मन्दारः—'मादार' इति भाषा। वृतिः—वेष्टनम्; 'बेड़ा' इति भाषा।

(२२५) शालयः—हैमन्तिकधान्यानि।

(२२६) मधुलिहः—भ्रमराः। माध्वीकं—मधु। बलिभुजः—काकाः।

(२२७) करीन्द्रम्—ऐरावतम्। पौलोमीपतिः—शचीपतिरिन्द्र इत्यर्थः। मथने—समुद्रमन्थने। मन्दरगिरे—हे मन्थाद्रे। शरण्यः शैलानां—पर्व्वतानां रक्षकः। रत्ननिलयः—रत्नाकरः समुद्र इत्यर्थः। अददात्—ददौ।

(२२८) शाखोटः—वृक्षविशेषः, 'सेओड़ा' इति भाषा। रसालः—आम्रः। विशेषग्रहः—उत्तमाधमविवेकः।

(२३०) आचक्ष्महे—कथयामः। सप्तमुनयः—मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठः। विलासवसतिः—लीलाभूमिः। पिशिताशनानां—हिंस्रजन्तूनां राक्षसानां वा।

(२३२) पल्लवः—विस्तारः वनं वा।

(२३४) जलनिधेः—बहुजलस्य। चण्डालेति—चण्डालवन्निष्ठुरसूर्य्येण।

(२३५) पिबतृषे—आहृणोपि। नीरग्रहणरसिकैः—जलपानानुरागिभिः। अध्वगैः—पथिकैः। उज्झितः—त्यक्तः।

(२३८) अचिराद्यः—सम्प्रति धनाढ्यो नीच इव रविस्तीव्रं तपति, अक्षतज्ञो जनः मित्रं यथा त्यजति तथा रुरुः मृगविशेषः शृङ्गं त्यजति। अन्यत् सुगमम्।

(२४१) (क) पतङ्गपाकसमये—पतङ्गस्य शालिधान्यविशेषस्य पाकसमये परिपाककाले। पतङ्गपतिविक्रमाः—पतङ्गानां पक्षिणां पतिः गरुड़ः तस्य विक्रम इव विक्रमो येषाम् ते। पतङ्गस्य—सूर्य्यस्य। पतङ्गाः—शलभाः। "पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्य्ययोः"—मेदिनी।

(२४२) प्राची—पूर्व्वदिक्। पिङ्गा—पिङ्गलवर्णा। रसपतिः—पारदः। ग्राम्यसदसि—ग्राम्यजनसभायाम्। द्रविणरहितानां—निर्धनानाम्।

(२४३) घूकाली—पेचकसमूहम्। लोकालिं—जनसमूहम्।

(२४४) (क) हृताः अन्येनापहृताः नववध्वो येषां तादृशानां पुरुषाणाम् अयम् अम्भोधिनिमज्जनरूपः पन्थाः। करैः—किरणैः; पक्षे हस्तैः।

(ख) अस्मान्—रामादीन्। व्यामर्षात्—क्रोधात्। स्तनगतघनोर्म्मिम्—शब्दितोत्तालतरङ्गम्। करैः—किरणैः; पक्षे हस्तैः।

(२४५) उलूकाः—पेचकाः। चिरात्—( अव्ययम् ) दीर्घकालं व्याप्येत्यर्थः। निद्रामुद्रां—निद्राचिह्नम्, निद्रया नेत्रनिमीलनं वा।

(२४८) तत्र—तयोर्मध्ये। क्रकचनिकरैः—शङ्खभेदकास्त्रविशेषैः।

(२४९) गुञ्जया सह—गुञ्जा—'कुँच' इति भाषा। तोलयन्ति—ऊर्ध्वपरिमाणेन समीकुर्व्वन्ति। श्लोकेऽत्र भुजङ्गप्रयातच्छन्दः।

(२५०) (क) सच्छिद्रः—छिद्रं रन्ध्रं; पक्षे दोषः। वक्रः—कुटिलः।

(ख) अलिकुलैः कमलमिव कज्जलैरचिकमलं रञ्जितमित्यर्थः।

(ग) विधिना इदमेवादिष्टं, हे स्वर्ण त्वं कर्णगतं भव, श्रुतिमात्रे तिष्ठ; कामिनीकाञ्चनयोस्तत्त्वज्ञानपरिपन्थित्वात् व्यवहारसंसर्गं मा कुरु। तु किन्तु तदर्थं विधातृवाक्यार्थम् अजानद्भिः बोद्धुमक्षमैर्मूढै रित्यर्थः। तेन—स्वर्णेन।

(२५१) दावविधुराणि—दावानलदग्धानि। रिक्तः—शून्यः जलरहित इत्यर्थः।

(२५२) रसा—पृथ्वी। पूषकरोत्करैः—पूष्णः सूर्य्यस्य कराणाम् उत्करैः समूहैः। एकान्तेन—तन्नतेन। अन्तरागतम्—अवसरप्राप्तम्। स्वान्तेन—चेतसा। अभितः—सम्मुखे।

(२५३) असमञ्जसम्—अयोग्यम्। मण्डूकः—भेकः।

(२५४) विवस्वान्—सूर्य्यः। मीनमेषवृषाणां क्रमपाठात् भोगवासनाया उत्तरोत्तरं प्राबल्यं सूचितमिति।

(२५६) खलानां—सदसद्विवेकविधुराणाम्। अस्ताशङ्कं—अस्ता नष्टा आशङ्का यस्मिन् तद् यथा तथा। जठरपिठरीपूर्त्तये—उदररूपस्थालीपूरणाय। गोपवेशस्य विष्णोः—श्रीकृष्णस्य। गुणगणनया—गुणकीर्त्तनरूपस्तोत्ररचनया प्रायश्चित्तं कुर्य्याम्।

(२६०) कुम्भकर्णायते—कुम्भकर्णवत् दीर्घनिद्रां याति। सन्देशे—संवादवहने। वस्तुनिरीक्षणे—द्रव्यदर्शने।

(२६१) स्तेयव्रते—चौरकर्म्मणि। मृषाजल्पेषु—मिथ्याकथनेषु। कोलः—शूकरः।

(२६२) वातपित्तकफादयो धातव उच्यन्ते। वैद्यकनये—वैद्यशास्त्रे। तरलयन्तः—व्याकुलीकुर्व्वन्तः।

(२६३) सागरस्य रावणसन्निहितत्वादिति।

(२६५) अन्वेषयता—अन्वेषणम् अन्वेषणं कुर्व्वता। तत्करोति तदाचष्टे इति णिच्, ततः शतृप्रत्ययः।

(२६६) दृढ़तरं निवद्धा मुष्टिर्येन, पक्षे यस्मिन् तस्य। एकत्र दृढ़मुष्टिबन्धेन धनं रक्षतः, अन्यत्र धारणकाले। कोषे धनागारे निषण्णस्य अपहरणादिभयात् सदैव दत्तदृष्टेः, पक्षे कोषे आवरणे स्थितस्य। सहजमलिनस्य—नीचस्वभावस्य; पक्षे स्वभावतः कृष्णवर्णस्य। आकारतः—आकृत्या आकारेण वर्णेन च।

(२६८) वधूटी—बाला वधूः। अनु—सह।

(२६९) अनवद्येति पदं परत्र यथासम्भवं लिङ्गव्यत्ययेनान्वितव्यम्।

(२०१) वेदादीनां पञ्चमादित्वादीनाम् असत्त्वेऽपि तत्कथनात् तेषां तद्वत् कार्य्यकारित्वमिति बोध्यम्। प्रसिद्धानि नीलकवज्रकादीनि पञ्च, धन्वन्तरिक्षपणकादीनि च नव, इति चतुर्द्दशरत्नानि।

(२०३) तत्र—पूर्णचन्द्रे। कमलालये—इत्यनेन विपदृष्टिहेतुः सूचितः।

(२०४) अर्भकम्—शिशुम्। कर्पटम्—वस्त्रम्।

(२०५) स्थूणा—गृहस्तम्भः, 'खुँटि' इति भाषा। अभ्यर्णजलागमः—अभ्यर्णः आसन्नः जलागमः यस्मिन् तादृशः कालः।

(२०६) मयि जीवति सति नान्यगाः—अन्यं पुरुषान्तरं गच्छन्ति यास्तादृश्यो न। यद्यपि क्षुधा तृष्णा च कदाचिन्मां मुञ्चति आशा तु न क्षणमपि।

(२०८) संग्रहा—सं सम्यक् यहो ग्रहणं यस्याः सा, यथाविधि परिणीता अभूदिति शेषः।

(२८१) जनस्थानं—दण्डकारण्यमध्यपाती भूखण्डविशेषः ; पक्षे लोकालयः। कनकमृगीति—कनकमृगः मायामृगः, तद्विषयिणी तृष्णा लिप्सा तदन्वितधिया ; पक्षे कनकमेव मृगतृष्णा मरीचिका तदनुगतबुद्धिना। अयि वैदेहि ! इति वचः। प्रतिपदम्—पदे पदे। उदश्रु—सजलनयनं यथा तथा। प्रलपितं—मृषा कथितं ; पक्षे वै इति पादपूरणे। देहि इति वचः ; अन्यत् सुगमम्। लङ्काभर्त्तुः—रावणस्य, वदनानां या परिपाटी अनुक्रमस्तस्यां इषुरचना बाणवर्षणं कृता ; पक्षे ईषत् भर्त्ता काभर्त्ता निकृष्टस्वामी तस्य समीपे वदनपरिपाटीषु गुणकथनशृङ्खलासु रचना अवम् अत्यर्थं कृता। कुशलवसुता—सीता, कुशलवौ सुतौ यस्याः सा ; पक्षे कुशलानि पटूनि योग्यानीत्यर्थः वसूनि धनानि यस्य तस्य भावस्तत्ता। अधिगता—प्राप्ता।

(२८३) विगतकलङ्कः—सति द्वितीये आभरणे कलहः सम्भवेत्, अत्र तु तदभावात् कलहाभाव इति भावः।

(२८४) शातयति—पातयति। ज्ञपयति—नाशयति।

(२८५) वाग्गुलाः—जघन्यवृक्षविशेषाः ( 'बेलेड़ा' इति भाषा )। कुपिठर-जठरे—कुत्सितपाकस्थालीरूपजठरे। गण्डूपदानां—किञ्चुलुकानाम्। कर्पटे—वस्त्रे।

(२८७) सकलं—सर्व्वं पैतृकं धनम्। लयं—नाशम्। तं—दारिद्र्य-सहोदरम्। मत्—मत्तः।

(२८८) मानसुता—मानस्य सुता मम आद्यवनिता प्रथमा स्त्री। अपरा वनिता भिक्षा दैन्यस्य कन्या। तातैश्वर्य्यविगर्विता—तातस्य दैन्यस्य ऐश्वर्य्येण प्रभुत्वेन विशेषेण गर्विता। एतेन दैन्यस्य प्राबल्यं सूचितम्।

(२९०) कृताः—दैन्यदण्डैरिति शेषः।

(२९६) मत्सरजुषां—खलानाम्। दुर्ग्रहः—दुर्बुद्धिः। कासारे—सरसि।

(२९७) अर्थिजनोपघातम्—याचकजनानां विघ्नम्।

(२९९) आकलय्य—ज्ञात्वा। विरूपाक्षतां—विकटलोचनत्वं विमुखत्वमिति यावत् ; पक्षे शिवत्वम्। सङ्गे—संसर्गे समीपागमने इति यावत्। विरोचनत्वं वैरूप्यम् ; पक्षे :सूर्य्यत्वम्। नृसिंहाकृतिं—नराकारसिंहभावं ; पक्षे तद्देवत्वम्। वक्रतुण्डरचनं—वक्रेण वक्रभावापन्नेन तुण्डेन मुखेन रचनं वाक्यविन्यासं ; पक्षे वक्रेण

शशिना कृतं तुण्डस्य मुखस्य रचनं निर्म्माणं तद्रूपं गणपतिभावम्। अपर्णात्मतां— पर्णस्यापि अभावशालिदरिद्रस्वरूपताम्; पक्षे अपर्णा दुर्गा तत्स्वरूपतां शक्तिरूपत्वमिति यावत्।

(३००) शेषे—अनन्तनागे। भवभराक्रान्ते—ब्रह्माण्डभारनिपीड़िते। श्रिया—लक्ष्म्या। लक्ष्मीवन्तः—लक्ष्मीविशिष्टाः धनिन इत्यर्थः।

(३०१) सरसिरुहरुचां—कमलकान्तीनाम्। अन्तरङ्गैः—आत्मीयैः तत्तुल्यकान्तिविशिष्टैरित्यर्थः।

(३०२) करीरद्रुमे—वंशाङ्कुरे कण्टकिवृक्षविशेषे वा। खरः—गर्द्दभः अश्वतरी वा।

(३०३) संख्ये—युद्धे। हेलाम्—अवहेलाम्। गरुत्मन्तं—गरुड़म्। वदनभृतां—मुखविशिष्टानां जनानाम्।

(३०४) द्व्यादिगुणान्वितः—द्वित्रिचतुरादिभिर्विषयैरन्वितः; पक्षे द्वित्रिचतुरादिभिरङ्कैर्गुणितः। लाङ्गविः—लृकारस्य आकृतिरिव आकृतिर्यस्याः सा नवमसंख्येत्यर्थः। द्व्यादिसंख्यया नवमसंख्याया गुणे कृते यो राशिर्भवति तस्य योगफलेनापि पुनर्नवमसंख्यैव जायते। यथा २×९=१८; १+८=९। एवं त्र्यादिभिर्गुणेऽपि।

(३०८) सप्रस्वेदः—घर्म्मार्त्तः। पुलकपरुषः—रोमाञ्चान्वितः। संभ्रमी—भ्रमणशीलः भ्रान्तश्च। सप्रकम्पः—कम्पयुक्तः। सान्तर्द्दाहः—दरिद्रः अन्नचिन्तया, ज्वरी च ज्वरप्रकोपाद् अन्तर्द्दाहविशिष्टः। प्रशिथिलधृतिः—च्युतधैर्य्यः, उभयोरपि विचारबुद्धेरभावात्। सास्यशोषः—चिन्तया ज्वरप्रकोपेण च शुष्कमुखमध्यः।

(३१२) गजघटासंघट्टदुःसञ्चरम्—मदमत्तगजसङ्घसङ्घर्षैर्दुर्गमम्। प्रधनं—युद्धम्। सर्पन्ति—गच्छन्ति।

(३१४) स्वेन समुद्घटेन—स्वरचितेन उद्भटश्लोकेन।

(३१५) न्यक्काराय—धिक्काराय पातयितुः कवेरिति शेषः। एवं परत्र। पापं हि अस्थानोपन्यासजनितमिति बोध्यम्।

(३१६) हारैः—स्रग्भिः। साड़म्बरैः—वैचित्र्यबाहुल्ययुक्तैः। अम्बरैः—वस्त्रैः। निष्पीड़ितो यः पार्वणामृतकरः पूर्णचन्द्रः तस्य स्यन्देन क्षरता अमृतेन उपमा येषां ते।

(३१०) तर्कुः—'टेको' इति भाषा। स्वपोषणार्थं कृतयत्नो जन: सिद्धिं लभते इति भाव:।

(३१९) विद्यावदातं—विद्यया अवदातं शुभ्रं निर्म्मलमित्यर्थ:। विष्टपकष्टहारिणि—भुवनदु:खविमोचके।

(३२०) आध्यताम्—गुरुणा पाठ्यताम्। कृतफलम्—सफलम्। ग्रहम्—ग्रहणम्, अर्थबोधमिति यावत्।

(३२३) दिविषद:—देवा:। दूरं विहाय:—दूरवर्त्ति आकाशं स्वर्गमित्यर्थ:। अर्थिसार्थात्—याचकगणात्।

(३२५) निगमा:—शास्त्राणि। दाम्पत्यसाम्ये गृहाश्रम: प्रशस्त:, तद्वैषम्ये तु निन्द्य इति भाव:।

(३२७) श्रीद: कुबेर: तस्य मित्रम्। लक्ष्मीकुबेरहरिरत्नानां यथाक्रमसम्बन्धात् गोविन्दादीनां सम्मान इत्यर्थ:।

(३३०) पृथुपथि—सुविस्तृतपथि स्वर्गगमनपथि इत्यर्थ:। संसारेति—संसाररूपं पृथु विस्तृतं भीषणमित्यर्थ: मरुस्थलं तस्मिन्। सुरतरु:—कल्पवृक्ष:।

(३३२) गुणवतां गुणानाम् उपादाता ग्रहीता यावन्न भवति तावत् त्रिभुवनमहार्घा: त्रिषु भुवनेषु महामूल्या अपि गुणवतां गुणा: असत्कल्पा: मन्दाभिप्राया भवन्तीति शेष:। अत्र दृष्टान्तमाह—दैत्यारेर्विष्णो: हृदयवसते: हृदि धारणात् प्राक् अपि स प्रसिद्ध: कौस्तुभमणि: अब्धौ समुद्रे किं नासीत् अपि त्वासीदेव। क्वचित् कुत्रापि अस्य मणे: श्रुति: श्रवणमपि अभूत् उपादातुरभावान्नाभूदेव इत्यर्थ:। गुणपरिचयेन गुणवतां माहात्म्यम् आश्रयमूलमेवेति भाव:।

(३३३) रत्नाकर:—समुद्र: स्वरत्नै: किं कुरुते आत्मन: किं हितं साधयति न किमपीत्यर्थ:। एवं सर्वत्र। श्रीखण्डखण्डै:—चन्दनकाष्ठै:। विभूति:—सम्पत्।

(३३४) मन्दाध्वक्रमराजहंसनिचय:—अध्वनि पथि क्रम: पादविक्षेप: अध्वक्रम:। मन्द: अध्वक्रमो यस्य स चासौ राजहंसनिचयश्चेति।

(३३५) व्यलीकानि—अपराधान्। दग्धमन्दिरसारे—( वह्निविशेषणमेतत् ) दग्धं मन्दिरसारं श्रेष्ठगृहं येन तादृमपराधकारिण्यपि।

(३३८) तदुद्भवः—तस्मात् कुम्भात् उद्भवो यस्य सः अगस्त्य इत्यर्थः।

(३३९) परैः—अन्यैः स्तुतिपाठकैः; पक्षे द्विविचतुरादिभिरङ्कैः। वर्धिता-नामपि—उत्कर्षं गमितानामपि; पक्षे गुणितानामपि। लाकृतिः—लकारस्य आकृतिरिव आकृतिर्यस्याः सा, नवमसंख्येत्यर्थः। द्व्यादिसंख्यया नवमसंख्याया गुणे कृते यो राशिर्भवति तस्य सङ्कलनेनापि पुनर्नवमसंख्यैव जायते। यथा २×९=१८; १+८=९। एवं त्र्यादिभिर्गुणेऽपि।

(३४०) मौखर्य्यं—वाचालता। मौनं—तूष्णीम्भावः।

(३४१) विहगखलः—विहगेषु खलः। "पक्षिधूर्त्तश्च वायस" इत्युक्तेः। प्रतिपलं—प्रतिक्षणम्। विलोलः—चञ्चलः। काकोलः—द्रोणकाकः ( 'दोँड़काक' इति प्रसिद्धः )। कीर—हे शुक।

(३४२) कामदुघा धेनुः—अभीष्टदायिनी गवी। तृतीयं नेत्रं—विद्यायाः सूक्ष्मदर्शनसाधनत्वात्। सत्कारायतनं—समादरभूमिः।

(३४४) सद्वंशजातम्—उत्कृष्टवेणुरचितं; पक्षे सत्कुलसम्भूतञ्च। गुण-कोटिनम्रं—गुणेन मौर्व्या कोट्योः कोटिद्वये नम्रं; पक्षे बहुगुणैरवनतस्वभावम्। असव्ये—दक्षिणे। सत्पक्षयोगात्—सद्भ्यां वर्त्तमानाभ्यां पक्षाभ्यां पार्श्वद्वयनिहिताभ्यां पक्षिपक्षाभ्यां सह योगात्; पक्षे सता साधुना पक्षेण सहायेन सह सम्बन्धात्। उक्तञ्च "कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः" इति।

(३४५) सपक्षः—पक्षाभ्यां सह वर्त्तमानः; पक्षे सहाययुक्तः। स हि पक्षहीनः—हि यतः स सिंहः पक्षहीनः पक्षशून्यः असहाय इत्यर्थः।

(३४६) धीरं—सुविचारपुरःसरं; पक्षे मन्दं मन्दम्। पदम्—सुप्तिङन्तादि पदम्; पक्षे चरणम्। शब्दं समुद्वीक्षते—शब्दोऽयं शुद्धः अशुद्धो वा इति विचारयति; पक्षे कुत्र कः शब्दो जायते इति शृणोति। नानार्थाहरणम्—श्लिष्ट-पदप्रयोगेण विविधार्थसंग्रहम्; पक्षे स्वर्णरौप्याद्यपहरणम्। अलङ्कारम्—उपमादि-विविधालङ्कारम्; पक्षे कङ्कणादिभूषणम्। सुवर्णनिचयम्—सुश्राव्यवर्णसमूहम्; पक्षे स्वर्णसमूहम्। रसान्तर्गतम्—शृङ्गारादिरसमिश्रं वाक्यम्; पक्षे रसायाः पृथिव्याः अन्तर्गतम्—अभ्यन्तरस्थं लुक्कायितं धनम्। दोषान्वेषणतत्परः—दोषाणां

दुःश्रवत्वादीनां काव्यस्येति शेषः अन्वेषणी तत्परः मनोयोगी ; पक्षे दोषा रात्रिः तस्या अन्वेषणी तत्परः।

(३४८) कविताकान्ता स्वयंवरेति शेषः। व्याकरणज्ञं पितरं नैव एति कविताया व्याकरणज्ञानजन्यत्वात् तस्य तस्याः पितृत्वम्। छान्दसात्—वेदाध्यायिनो जनात्।

(३४९) वज्रो मणिः—हीरकम्। करटारवाः—करटानां काकानां आरवाः शब्दाः।

(३५०) चन्दनशब्दस्य क्लीवत्वे चन्दनकाष्ठार्थप्रतीतिः।

(३५१) कुम्भसम्भवः—कुम्भजातोऽगस्त्यमुनिः।

(३५२) पात्रम्—दीपाधारम् ; पक्षे परिवारवर्गम्। मलं—पापं ; पक्षे सुगमम्। स्नेहं—तैलं ; पक्षे सुगमम्। गुणान्—दीपवर्त्तिकाः ; पक्षे विनयादीन्। क्षिणोति—नाशयति। द्रव्यावसानसमये—तैलाद्यभावे ; पक्षे खाद्यपरिधेयाद्यभावे। कुलसद्मनि—वंशकुटुम्बे। कोऽपि—अनिर्व्वचनीयः, साधारणदीपादितर इत्यर्थः।

(३५३) भास्वति—सूर्य्ये। शनैश्वरः—सूर्य्यसुतः। विधौ—अस्तं गते इति शेषः। बुधः—सौम्यः।

(३५४) अवंशभवाः—वेणुभिन्नवस्तुनिर्म्मिताः ; पक्षे नीचकुलोत्पन्नाः। गुणेन मौर्व्या नैपुण्यादिगुणेन च प्रयुक्ताः प्रेरिताः सन्तः परमर्म्मभेदिनः परेषां मर्म्मस्थान-विदारकाः भवन्ति। ये च विशुद्धवंशजा उत्कृष्टवेणुनिर्म्मिताः उत्कृष्टकुलोत्पन्नाश्च ते तथाविधाः गुणप्रयुक्ताः चापा इव नम्रतां व्रजन्ति। वंशस्यैव गुणदोषा हि पुंसां सदसत्प्रवृत्तिं जनयन्तीति भावः।

(३५६) चुलुकीकरोति—गण्डूषीकरोति नाशयतीत्यर्थः। किञ्च—अन्यच्च।

(३५७) पूर्वार्द्धेन बकस्य गुणाधिक्यं दर्शयति। उभौ पक्षौ शुक्लौ शुभौ बकस्येति यावत् ; परं चन्द्रस्य एकपक्ष एव शुक्लः। वियति—आकाशे। अव्याहतगतिः—बक इति शेषः ; चन्द्रस्तु केवलाकाशे। बकः सदा मीनं भुङ्क्ते खादति ; चन्द्रस्तु मासमेकं मीनराशिं भजते। बकः सकलस्थाणुशिरसि समस्त-शाखापत्रशून्यवृक्षोपरि वसति ; चन्द्रस्तु एकस्य स्थाणोः शिवस्य शिरसि वसति ;

कश्चित् एभ्यः पृथक् कोऽपि अधिकः गुणः चन्द्रेऽस्तीति शेषः। स च इत्याह गुणा इति। स्थाने योग्याधिकरणे मान्याः पूज्याः; स्थानरहिता अयोग्यस्थाने निहिताश्चेत् नहि, न तादृक् मान्या भवन्तीति फलितार्थः। स्थानोत्कर्षेणैव गुणानामुत्कर्ष इति भावः।

(३५८) वचःस्थलीति—हरेर्वचःस्थली, विधेर्वदनं, हरस्य वामशरीरभागः तैः। पुरुषास्त्रयः—हरिविधिहराः।

(३५९) समुद्रं प्रति रावणस्य तिरस्कारोक्तिरियम्। रावणेन दशभिर्मुखैः अम्बुधिशब्दादय उच्चारिताः।

(३६१) वागुरिक—व्याध। सीदन्ति—दुःखमनुभवन्ति। शष्पकवलग्रहणा-नभिज्ञाः नवकोमलतृणान्यपि भक्षयितुमक्षमाः।

(३६७) कौरवपाण्डववार्णेयान् सम्बोध्य दुःशासनं प्रति भीमस्य क्रोधोक्तिरियम्। वः—युष्माकम्। तम्—दुःशासनम्।

(३६८) अन्यच्छ्रुति—श्रुतं विद्या।

(३७०) वोढा—वहनशीलः। धनपतिसखम्—कुबेरसित्रं शिवमित्यर्थः।

(३७२) (क) वाजिमखस्य—अश्वमेधयज्ञस्य।

(ख) षुञ् ऐश्वर्यप्रसवयोरित्यदादिगणीयस्य सु-धातो रूपम्। "प्रसौति विजयं धर्म" इति हलायुधः।

(३७४) तत्तातः—तस्याः मुक्तेः तातः पिता। दौत्यं—दूतकर्म, विवाहकार्यं घटकत्वमिति यावत्। भर्त्तः—हे भर्त्तः। परिहसनविधौ—कौतुकच्छलेन।

(३७५) स्वःसिन्धुतीरे—स्वर्गगङ्गातटे, मन्दाकिनीतीरे इत्यर्थः। अघविघात-वीरे—अघानां पापानां विघाते विनाशविषये वीरे वीरसदृशे। चीरे—अजिने। अधीरे—नश्वरे।

(३७६) हर—शिव। हर—नाशय। ह—सम्बोधने। "ह स्यात् सम्बोधने पादपूरणे च विनिग्रहे" इत्यादि मेदिनी। गङ्गेत्यादि—हे गङ्गाधर स्वे पदाब्जे मे चेतसः धरभावं धारकत्वं धर अवलम्बस्व, स्वकीये पादपद्मे मदीयं चित्तं स्थापय इत्यर्थः। भवेत्यादि—हे भव, भव एव सिन्धुः तस्मिन् भवसिन्धौ संसारसागरे मे कर्णधारः

नाविकः भव, मां संसारसागरस्य पारं नय इत्यर्थः। अपिच भवः सिन्धुरिव तस्मिन् भवसिन्धौ सिन्धुवत् महाविपत्सङ्कुले संसारे मे कर्णधारः भवः अतिमूढत्वात् असत्पथप्रवृत्तस्य मम कर्णं धृत्वा सत्पथप्रवर्त्तको भव इत्यर्थः। किञ्च भवसिन्धौ सर्वमङ्गलास्पदे अत्र काशीचैत्रे मे कर्णधारी भव, मरणसमये तारकमन्त्रं दातुं मम कर्णं धारय ; "यत्र काश्यां श्वत्वेऽपि जन्तुर्नाशुचितां व्रजेत्। अतस्तत्कर्णसंस्पर्शं करोम्यहमपि स्वयम्" इति प्रतिज्ञातवान् त्वं यथा मे काशीमृत्युर्भवेत् तथा करुणां कुरु इति भावः। "भवः चेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" इति मेदिनी। मृत्युमित्यादि—हे मृत्युञ्जय त्वं जय सर्व्वोत्कर्षेण वर्त्तस्व, दैवतान्तराणि परित्यज्य केवलं त्वामेवाहं प्रणमामीत्यर्थः। जय शम्भो इति वाक् सदा मदास्ये मदीयवदने स्यात् अस्तु।

(३७७) (क) समाप्य—उपभुज्य। विषयान्—भोग्यवस्तूनि। कल्लोलः—तरङ्गः।

(३७९) (क) (रन्ध्रम्=९ ; शुभांशुः=१ ; रूपम्=१ ; नक्षत्रनायकः=१ ) अतएव ९१११ अङ्कस्य वामगत्या १११९ शकाब्दाः (६०४ वङ्गाब्दाः, ११९७ खृष्टाब्दाः वा ) उद्भवन्ति।

(ख) ९१११ अङ्कस्य वामगत्या १११९ शकाब्दा उद्भवन्ति।

(३८०) (क) बाणः=५ ; व्याहृतिः=७ ; रागः=६ ; इन्दुः=१। अतएव अङ्कस्य वामगत्या १६७५ शकाब्दा (११६० वङ्गाब्दाः, १०५३ खृष्टाब्दा वा) उद्भवन्ति।

(ख) धरेति—भूदेवराजस्य वारेन्द्रवंशीयस्य गौड़प्रदेशाधिपस्य रामकान्तनृपस्य। भाविनी—सहधर्म्मिणी। श्रीभवानी—श्रीमती राज्ञी भवानी।

(३८१) खम्=० ; शून्यम्=० ; मित्रम्=१७। अतएव अङ्कस्य वामगत्या १७०० शकाब्दा ( ११८५ वङ्गाब्दाः, १७७८ खृष्टाब्दा वा ) उद्भवन्ति।

(३८२) गङ्गावासे—नवद्वीपाद्दूरपूर्व्वदेशवर्त्तिनि प्रान्तगङ्गातीरस्थायिनि ग्रामविशेषे। विधिश्रुतिः=चतुर्मुखकर्णः=८ ; सुकृतं=पुण्यं=९ ; क्षौणिपालः—राजा=१६। अतएव अङ्कस्य वामगत्या १६९८ शकाब्दाः (११८३ वङ्गाब्दाः, १७७६ खृष्टाब्दा वा ) उद्भवन्ति।

(३८३) पाणिग्रहः—विवाहः ; पक्षे पाणौ हस्ते धारणम्। सुवंशोद्भवा—उच्चकुलजाता ; पक्षे उत्तमवेणुत्पन्ना।

(३८४) येन विष्णुना रामेणेत्यर्थः ; अयो लौहं लक्षणया तन्निर्म्मितमस्त्रमित्यर्थः ; भूत्वा रावणः दायः खण्डितः हत इत्यर्थः । दो-धातोः कर्म्मणि घञ् ।

स रामरूपी विष्णुर्वो युष्मान् अव्यात् पायात् । रावणं विशिनष्टि—करणोरणः, करणे कार्य्ये युद्धकर्म्मणीति यावत् उरणः मेष इव तद्वत् विपक्षमपराभूय कथमपि रणान्न निवर्त्तते इति भावः । यद्वा करणे इन्द्रिये तदुपभोगे उरण इव पशुस्वभाव इति यावत् परदारापहारकत्वादिति भावः । रणरणः—रणे युद्धे रणति स्पर्द्धया सिंहनादं करोति यस्तादृशः । राणः—राति ददातीति कर्त्तरि अनः, दातेत्यर्थः । अरणः—न विद्यते रणो युद्धं यस्य तादृशः, रामेण सह युद्धात् प्राक् दिग्विजयित्वान्निवृत्तयुद्ध इत्यर्थः । अत्—अत्ति भक्षयति मानुषानिति शेषः, नरमांसभक्षकः । अभीः—आदिष्णोर्भीर्भयं यस्य सः । अधुना रामं विशिनष्टि । अत्र यस्येति पदमव्याहार्य्यम् । यस्य रामस्य रामा पत्नी सीतेति यावत् रम् अग्निं आर आत्मशुद्धये वह्निं प्रविवेश । सीता कीदृशीत्याह या सीता मारं कन्दर्पं प्रत्यपि अरमा अनभिलाषा पतिव्रतेत्यर्थः । या च रमासारमा—रमाया लक्ष्म्याः सारं तेजः माति परिमितं करोति, स्वरूपतो लक्ष्मीरित्यर्थः । रामः स्वयं कीदृशः ? श्रीमानदयोदयः—श्रीः सम्पत् मानश्चित्तसमुन्नतिः दया परदुःखापहरणेच्छा आसाम् उदयो यस्मात् सः, यमाराध्य सर्वे ऐश्वर्य्यं सम्मानं तदनुग्रहञ्च लभन्ते इत्यर्थः । पुनः कीदृशः ? दयदयः—दये दाने दया यस्य सः, यो हि पात्रेभ्यः सदयं ददाति न त्वसन्तोषमित्यर्थः । अपिच वेदयः—वेदयतीति णिजन्त-विद-धातोः क्वदन्तरूपं, मानवदेहमाश्रित्य स्वकर्म्मभिः परेभ्यो ज्ञानप्रद इत्यर्थः । किञ्च जिष्णुः—जयशीलः । पुनः कीदृशः अभीरभीरभरभीराभीः—न भीरभीः अभयमित्यर्थः अभियं राति ददातीति अभीरो वायुर्जगत्प्राणत्वात्, अभीराय वायवे भियं राति ददातीति अभीरभीरः सर्पः पवनाशनत्वात्, तस्य भरो धारणं तेन भियं राति यः भयप्रदः, अभीरभीरभरभीरो गरुड़ः तस्मात् अभीः अभयं यस्य तादृशः विष्णुरिति फलितार्थः गरुड़वाहनत्वादस्येति । पुनः कथम्भूतः ? अभीसोः—न विद्यते भीर्भयं देवेभ्य इति शेषः यस्य स इन्द्रजित् तं स्यति हिनस्तीति अभीसो लक्ष्मणः तम् अवति रक्षति अभीसोः ।

(३८५) इष्टम्—अभिलषितम् अङ्कम् । वार्त्तिकदर्शनेन—१२ अङ्केन ।

रुद्रेण—११ अङ्केन। ब्रह्मास्यप्रहतं—४ अङ्केन गुणितम्। जलाधिपतिना यच्छेषितं—वरुणेन २४ अङ्केन इत्यर्थः भक्तं सत् यत् अवशिष्टम्। वेदाङ्गेन हतं—६ अङ्केन गुणितम्। एवंप्रकारेण १२० संख्या उद्भवति।

(३८६) इष्टम्—अभिलषितम् अङ्कम्। खाब्धेति—००० युक्तम्। खखयमेति—२०० राशिना व्यवकलितम्। खखेशेति—११०० अङ्केन युक्तम्। खाकाशेति—५०० राशिना भक्तम्। यच्छेषितम्—यत् शेषितं भागावशिष्टं, तत् द्विगुणितं; पुनश्च दृगृहतं २ अङ्केन गुणितं; ४ अङ्केन गुणितमित्यर्थः। खाकाशाग्नीति—३०० अङ्केन युक्तम्। शशियुतम्—( पुनश्च ) १ अङ्केन संयुक्तम्। एवंप्रकारेण १९०१ खृष्टीयाब्दा उद्भवन्ति।

(३८७) इष्टम्—अभिलषितम् अङ्कम्। बाणगुणम्—५ द्वारा गुणितम्। सुखेन सहितम्—४ युक्तम्। खाङ्काहतम्—९० गुणितम्। तत् नष्टम्—तत् शरभूधरैः ७५ द्वारा नष्टं भक्तं; तत्र यद् अवशिष्टं तत् पक्षेण २ द्वारा गुणितञ्च। संवत्सरम्—व्याप्य इत्यर्थः। अर्थात् १२० वत्सरं व्याप्य शिष्टा जना जीवन्तु।

अथवा इष्टम्—अभिलषितम्। नागहतं—८ द्वारा गुणितम्। युतं शशभृता—एकेन सह युक्तम्। निघ्नं शरघ्नैः शिवैः—५५ द्वारा गुणितम्। व्योमयुगैः नष्टं—४० द्वारा भक्तस्य यत् अवशिष्टं तत्। गजेन—८ द्वारा। अर्थात् १२० वत्सरं व्याप्य शिष्टा जना जीवन्तु।

(३८८) स कश्चिद् गुणग्राही जनो रत्ने कस्मिंश्चिद् गुणवति जने रेमे ननन्द "जातौ जातौ यदुत्कृष्टं तद् रत्नमिति कथ्यते"। स कीदृशः? न मोदन्ते प्रमोदं न यान्तीत्यमुन्दि अचाणीन्द्रियाणि यस्य सोऽमुदक्षो जितेन्द्रियः। तथा अखदमनयदः शत्रुपशमनीतिदाता। तथा सेवायां परप्रणतौ सर्गः उत्साहस्तस्मात् उदस्तो निवृत्तः स्वाधीन इत्यर्थः। रत्ने कीदृशे? वेदानापन्नो वेदापन्नस्तत्र अधीतवेदे इत्यर्थः। तथा शक्ते प्रियंवदे। तथा रचितः कृतो निजाया रुजो रागद्वेषात्मिकाया बाधाया उच्छेदे उन्मूलने यत्नो येन तस्मिन् रचितनिजरुगुच्छेदयत्ने। तथा न रमन्ते सुजनेषु धर्मे वा ये ते अरमा दुर्जनास्तानीरयति दूरीकरोति यस्तस्मिन् अरमेरे दुर्जनदूरीकारके इत्यर्थः। तथा देवेषु आसक्तो देवासक्तस्तस्मिन् देवासक्ते देवपूजानिरते इत्यर्थः। तथा

तोदस्य व्यथाया दुर्गाः दुर्गमाः परानभिभूतास्तानस्यन्ति क्षिपन्तीति तोददुर्गासास्तेषां वासे निकेतने ; शूराणामपि शूरा यमाश्रिताः तस्मिन् इत्यर्थः । तथा दयनं दानं रक्षा वा, तेन यो मदलवो गर्व्वकणिका तेन यः चोदः परिवेदना तेन मुक्ते रहिते, प्रियं कृत्वापि अगर्व्वित इत्यर्थः । तथा वादेन सह वर्त्तते सवादस्तस्मिन् प्रमाणशास्त्रज्ञे इत्यर्थः । तथा अयन् अगच्छन् अच्छो निर्म्मलता यस्मात् तस्मिन् अयदच्छे शुद्धिमति इत्यर्थः । तथा गुरुभिः गुरुसेवाभिर्जनितो यश्चिरं क्लेशः श्रमस्तेनैव सन्ने श्रान्ते अथवा सन्ने आसक्ते । तथा अपदान् पदभ्रष्टान् अवतीति अपदावः, यद्वा अपगतो दावः, उपतापो यस्मात् तस्मिन्निति ।

(३८९) (क) कः कर्णारिपिता ?—कर्णशत्रोरर्ज्जुनस्य पिता "वासवः" । किमिच्छति जनः ?—"हरत्वम्" । किं स्वीकृतं विष्णुना ?—"कृखत्वम्" ( वामनत्वम् ) । को जानाति परेङ्गितम् ?—"मतिमान्" । विषमगुः ( पञ्चबाणः कन्दर्पः ) कुत्रास्ति वा कामिनाम् ?—"मनसि" । सीता कस्य वधूः ?—"रामस्य" । प्रियः किमु हरेः ?—"कौस्तुभः" । वर्ज्यः कफे को नृणाम् ?—"अभ्यङ्गः" । इति अष्टप्रत्युत्तरपदानां मध्यमाचरसंयोगेन "सरस्वति नमस्तुभ्यम्" इति महामन्त्रः प्राप्तः ।

(३९०) (क) सन्धिमहोत्सवे—सन्धिपूजाकाले । सौहित्येन—पर्य्याप्तभोजनेन ।

(ख) शीतगुः—चन्द्रः । आतपत्ररचनां—छत्रधारणम् । दस्रौ—अश्विनीकुमारौ ।

(ग) भाद्रमासस्य शुक्लचतुर्थ्यां कृष्णचतुर्थ्याञ्च तिथौ नष्टचन्द्रत्वात् चन्द्रदर्शन-निषेधः ।

"पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥"

(घ) ब्राह्मणस्य—हे ब्राह्मण त्वं स्य खण्डय ( सो + लोट् + हि ) ।

(३९२) स्वकण्ठमापीड्य—रज्ज्वा इति शेषः । दृढं निपत्य—एतादृशः कुम्भस्य कूपपतनस्वभावः । उपनीय—गृहीत्वा । अवति—रक्षति । सतां—साधूनाम् ।

(३९७) पविं—वज्रम् । यवसवत्—तृणवत् । दवं—वनाग्निम् । शिला-प्रवालवत्—प्रस्तरखण्डवत् ।

(३९८) तमःस्तोमः—अन्धकारसमूहः । शलभः—पतङ्गः ।

(३९९) प्रकृतिलघौ—प्रकृत्या स्वभावेन लघौ तुच्छे। शुचौ—पवित्रे। भासितरखण्डः—भासमानः षड्ग्रसूत्रबद्धः शरत्तृणकाण्डखण्डः ( फातनेति प्रसिद्धः )।

(४०१) पण्डिते गोरसः वाक्यरसः। स्त्रीजने गोरसः चक्षूरसः दृष्टिरसो वा, दर्शनमाधुर्य्यमिति यावत्। भोजने गोरसः धेनुरसः दुग्धमित्यर्थः।

"दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु।
भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृतः॥"—हलायुधः।

(४०४) पनसः पुष्पमप्रदर्श्यैव फलं प्रसूते तथोत्तमजनोऽपि वाचमकृत्वैव कार्य्यं करोति। अतस्तत्साद्दृश्यमुत्तमस्य। आम्रः पुष्पं फलञ्च प्रकटीकरोति, तथा मध्यमोऽपि जनः प्रथमं वाक् परं कर्म्म इत्येवं करोति। अतस्तत्साद्दृश्यम्। कुन्दस्तु केवलं पुष्पमेव ददाति, तथा अधमोऽपि केवलं वाक्परायणः न तु कर्म्मतत्परः। अतः कुन्दसाद्दृश्यमधमस्य। पुष्पफलमित्यत्र जातिरप्राणिनाम् ( पा—२।४।६ ) इति द्वन्द्वैकवद्भावः। वाक्-कर्म्मेत्यत्र सर्व्वो हि द्वन्द्वो विभाषया एकवद्भवतीति न्यायाद् द्वन्द्वैकवद्भावः। वागपीत्यत्र अपि शब्दः अवधारणार्थः वागेव वाङ्मात्रमिति यावत्, न तु कर्म्मेत्यभिप्रायः।

(४१०) हेमकार—स्वर्णकार। सुवर्णगुणातिरेकः—सुन्दरवर्णगुणातिशयः।

इति तृतीय-प्रवाहः समाप्तः।

---

# शेषोक्तिः ।

( १ )

जामाता यत्र विष्णुः स्वयमुपयमने कन्यका लोकमाता
विश्वामित्रश्च दूतो निखिलगुणनिधिर्यागकर्त्ता वशिष्ठः ।
राजर्षिः सम्प्रदाता नरवरजनकस्ते यहाः सुप्रसन्ना
देवं तन्नौमि यस्याकरुणविधिवशात् सौख्यलेशो न तत्र ॥

( २-३ )

जनकः कृष्णचन्द्रो मे जननी विन्ध्यवासिनी ।
पितामहो रामचन्द्रः सार्थकः प्रपितामहः ॥
शोभाराम इति ख्यातो मद्वृद्धप्रपितामहः ।
देवद्विजमहाभक्ता इमे मे पूर्व्वपूरुषाः ॥

( ४ )

श्रीपूर्णचन्द्रकविभूषणकाव्यरत्नो
सौरे शुचौ व्यतनुतोऽङ्गटसागराख्यः ।
ग्रन्थं गुरोरतुलमुद्गटसागराख्यं
मैवे दिने ग्रहगुणेभशशाङ्कशाके ॥

( ५ )

संसारेऽखिन्नसारे कलिकलुषहरे भास्वरे सौधनीरे
सर्व्वस्थानैकसारे सकलसुखकरे जाह्नवीपुण्यतीरे ।
यस्यां भूतालिपाली निवसति नितरां लिङ्गशाली कपाली
हुग्लीजिलान्तरे सा मम सुजननभू "भद्रकाली" सुखालिः ॥

सम्पूर्णोऽयं ग्रन्थः ।

৯। বিশুদ্ধ "উপক্রমণিকা-ব্যাকরণ" ( ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত )। ( দ্বিতীয় সংস্করণ )। অধিক ধাতুরূপ, অনুবাদ ও সংশোধন বিষয়ক প্রশ্ন সহিত। মূল্য ॥০ ( আট আনা )।

১০। "সীতার বনবাস" ( ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত )। দুরূহ শব্দের অর্থ, ব্যাকরণ-গত বিষয়, "ভৌগোলিক বিবরণ" ও প্রায় ৫০০ ( পাঁচ শত ) সুন্দর প্রশ্ন সহিত। মূল্য ৷৹০ ( বার আনা )।

১১। "শকুন্তলা" ( ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত )। ইহা "সীতার বনবাসের" প্রণালী অবলম্বন করিয়া লিখিত। মূল্য ॥০ ( আট আনা )।

মেসার্স্ ম্যাক্‌মিল্যান্ এণ্ড কোম্পানী লিমিটেড্।

২৯৪ নং বৌবাজার ষ্ট্রীট্, কলিকাতা।

---

১২। বিশুদ্ধ "ব্যাকরণ-কৌমুদী" ( প্রথম-ভাগ ) ( ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত )। অধিক শব্দের রূপ ও প্রত্যেক প্রকরণে বহু-সংখ্যক প্রশ্ন। মূল্য ॥০ ( আট আনা )।

১৩। বিশুদ্ধ "ব্যাকরণ-কৌমুদী" ( দ্বিতীয় ও তৃতীয় ভাগ একত্র ) ( ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত )। তিন গুণ ধাতুর রূপ, ভ্রম বা প্রমাদ সংশোধন, অনুবাদ ও সংশোধন-বিষয়ক প্রশ্ন। রঘুবংশ, কুমারসম্ভব, মেঘদূত, ভট্টি, মাঘ, ভারবি, নৈষধ, উত্তররাম-চরিত, রামায়ণ ও মহাভারত প্রভৃতি গ্রন্থ হইতে উদাহরণ প্রদর্শন। ১১০০ ( এগার শত ) ধাতুর গণ, পদ, অর্থ ও লট্ বিভক্তির রূপ-নির্ণয়। গ্রন্থখানি ৪৪০ পৃষ্ঠে সম্পূর্ণ। মূল্য ১৲ ( এক টাকা )।

১৪। বিশুদ্ধ "ব্যাকরণ-কৌমুদী" ( চতুর্থ-ভাগ ) ( ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত )। সংস্কৃত সূত্র গুলির বিশদ ব্যাখ্যা ও উদাহরণ, স্ত্রী-প্রত্যয়ের ৬৫ হইতে ৭০ সূত্র গুলির নূতন সন্নিবেশ ও প্রচুর পরিমাণে প্রশ্ন বিধান। মূল্য ১৲ ( এক টাকা )।

১৫। "প্রবন্ধ-পাঠ" ( ৬ষ্ঠ সংস্করণ ) ম্যাট্রিকিউলেসন স্কুল-সমূহে সমাদৃত পাঠ্য-পুস্তক। ভাষা অতি বিশুদ্ধ ও প্রাঞ্জল। মূল্য ॥০ ( আট আনা )!

১৬। "মোহ-মুদ্গর" ও "মোহ-কুঠার" ( শঙ্করাচার্য্য-বিরচিত ও একত্র বদ্ধ )। ( দ্বিতীয় সংস্করণ )। বাঙ্গালা পদ্যানুবাদ ও শঙ্করাচার্য্যের জীবন-চরিত সহিত। মূল্য কাগজে বাঁধা।০ ( চারি আনা )।

শ্রীযোগেন্দ্রনাথ মুখোপাধ্যায়, ম্যানেজার, সংস্কৃত প্রেস ডিপজিটরী,

৩০ নং কর্ণওয়ালিস্ ষ্ট্রীট্, কলিকাতা।

